॥ श्रीशः शरणम् ॥

# मधुरवाणी

## संस्कृतमासपत्रिका

१६ वर्षस्य ४-५ संचिका:



प्रधान सम्पादकः

पं. गलगलीरामाचार्यः

संस्कृतसाहित्यरत्नम्

सम्पादकः

पं. पण्ढरीनाथाचार्यः

गलगली

वार्षिक मूल्यम् रूपकपञ्चकम्

१८७३ शकस्य

बागलकोट

## —: सानंद सूचना :—

मधुरवाणी मुंबयी प्रांतीय विद्याधिकारिभि: माध्यमिक (हायस्कूल) शाल छात्राणां पठनपाठनाय अनुमोदिता । शालेयबालानामेव कृते अस्मिन्नंके समासविचार: सरलकथाश्च प्रकटिता: । अत्रसर्वेऽपि अध्यापका: विद्यार्थिनश्च सहकुर्युरिति विश्वसिम: ।

## अ नु क्र म णि का

॥ श्रीशः शरणम् ॥

# मधुरवाणी.

सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभिरसमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१६ वर्षे ] आषाढ-श्रावण संयुक्तांकः [ १-२ संचिका:

## —: मंगलाचरणम् :—

सद्वंशप्रभवाः स्वभावसरला अन्यैर्वलापादित- ।
छिद्राः कृष्णतमाश्च सन्निधिमिता वन्याअपि स्त्रीरहम् ॥
धृत्वा पाणितलेन सुस्वरवतीः कृत्वाऽमृतं पायया-
म्येवं स्यापनचेतसेव मुरली चुंबन् हरिः पातु नः ॥
वैपंची नव काकलीति मुनिना वीणारवोल्लासिना ।
माद्यत्कोकिलमंजुपंचम इति व्याधाङ्गनाभिः श्रुतः ॥
गोपस्त्रीभिरुदारमन्मथधनुष्टंकार इत्यादरात् ।
रासे वल्लवतल्लजस्य मुरलीनादो विनोदाय नः ॥

## —: मासावतरणिका :—

गंभीरध्वनि नांबरेऽम्बुदकदंबाडंबरो जृंभते ।
चंचच्चंचलचंचलाचयचमत्कारोपि नोदंचति ॥
नो धारा न च दुर्दिनं न करकाः न स्फूर्जथु र्नीद्रता ।
आषाढेऽप्यधुना समस्त भुवनं निर्जीवनं निष्फलम् ॥
तृष्णालोलविलोचने कलयति द्यां चातकानां गणे ।
शोषं चांचति सिंधुनिर्झरजले दौर्भिक्ष्यशंकाकुले ॥
हंत श्रावणमासि कर्षक गणे कोलाहलं तन्वति ।
किं नाद्यापि विधे विधातु मुचिता धाराभिवृष्टि र्भुवि ॥

# संपादकालोकः

## दरिद्राणां मनोरथाः—

हन्त सन्तुष्यति नश्चेतः अस्मद्वाचकमहोदयानां स्नेहसहकारसहानुभूत्यादिकं निरीक्ष्य। गुणगणैर्गरीयसीं त्रिविधार्थविशेषैर्वरीयसीं सुरभारतीसेवया महीयसीं मृदुलपदबन्धैःमृदीयसीं वयोविद्यादिभिर्ज्यायसीं सुन्दरतराकारेण द्राघीयसीं रसमाधुर्येण स्वादीयसीं साधीयसीं श्रेयसीं प्रेयसीं च इमां षोडशीं मधुरवाणीं आसाद्य आलोक्य आस्वाद्य आलोच्य च बहव एव अस्माकं सदयहृदयाः सहृदयाः वाचकवरेण्याः अमन्दमानन्दम् अन्वविन्दन्। तथा एव स्वकीय हृदयानन्दं पत्र मुखेन विनिवेद्य अभिनन्द्य च समन्वगृण्हन् नः 'आपरितोषाद् विदुषाम् आत्मन्यप्रत्ययमस्माकं चेतः सहृदयधुरीणानां एतेषां वाचकवाचस्पतीनां नैराश्यप्रवाहपत्रायमाणानि प्रेमपात्राणि पत्राणि समीक्ष्य किंचिदिव समुत्श्वसति। समधिकं च समुत्सहते सुरसरस्वतीसेवां सविशेषमेव समाचरितुम्। केचिच्च सुरगीस्समुत्कर्षैकदत्तदृष्टयः विकसितमुष्टयः उदाराः वाचकाः षोडशवर्षीय प्रथमांकप्राप्त्यव्यवहितोत्तरक्षण एव वार्षिकमूल्यं प्रेषयित्वा आत्मनः आनृण्यं समपादयन्। परं वयं पुनः ऋणीकृतास्तैः वदान्यैः धन्यैर्मान्यवाचकैः। यदि सर्वेऽपि वाचका एवमेव स्वयं प्रेरणया देयं धनं दद्युः तदा प्रत्यंकं वाचकदेवता प्रार्थना प्रसंगो नैव परापतेत्। संपादकैः वार्षिकधनयाचनाप्रणालीशं धने वृथाऽयास्यमाना कल्पकबुद्धिः तत्प्रार्थनार्थं व्ययीक्रियमाणानि मधुरवाणी पत्राणि च सरसलेखांतरप्रकाशनाय रसिकपुंजरंजनाय च समुपयुक्तानि भवेयुः। संपादकानां व्ही. पी. वापीपतन प्रसंगाः तद्भयं वा नैव प्रसज्येत। वयं दृढं विश्वसिमः यत् अचिरादेव एतदंकं निरीक्ष्य तत्क्षण एव दक्षाः संस्कृत समुद्धारबद्धदीक्षाः ग्राहका सर्वेऽपि वार्षिकं धनं संप्रेष्य संमुद्रयेयुः पुनर्याचनाय निवृतानि नः दीनदरिद्रमुखानि इति।

## " मनोरथानाम् अगतिर्नविद्यते "

आबाल्यादेव स्वतः सुन्दर्याः प्राप्ते तु पुनः षोडशे वर्षे अप्सरायमाणायाः मधुरवाण्याः भावसौन्दर्यमुग्धानां भाषासौष्ठवलुब्धानां केषांचित् स्निग्ध-विदग्धानां प्रेमपत्रैः प्रोत्साहिता अभिनन्दनोक्तिभिरानन्दिता कतिपयवृत्तपत्रिका संपादकैरपि सश्लाघं पुरोगत्यै समुन्नत्यै च प्रचोदिता आत्मविश्वासेन च प्रेरिता वयमद्य मनोरथमारुह्य कल्पनासाम्राज्ये 'वियति बहुतरं स्तोकमुर्व्यां प्रयाम: " । शेखमहंमदविचारा: सदैव नः शीर्षे सन्निहिता एव सन्ति । "यदि एकमेव मासिकं अंकं व्यवस्थितरीत्या आविष्कृतमालोक्य मधुरवाण्याश्च प्रतिज्ञां सकृदेव हि आकर्ण्य रसिकवाचकानामयमीदृशः हर्षप्रकर्षः विद्याधरैर्यदि चैतादृशः प्रशंसापुष्पवर्षः हन्त तर्हि इयं मधुरवाणी अस्माभिर्यदि साप्ताहिकी विधीयते यदि च नियतवेलमप्रमादेन आविष्क्रियते तदा नूनं 'आमूलाद् रत्नसानोः मलयवलयिताद् आ च मूलात् पयोधेः । यावन्तः सन्ति काव्याद्यनुभवपटवः संस्कृतज्ञा रसज्ञाः' ते सर्वेऽपि नियतं ग्राहका अनुग्राहका वा भवेयुरेव । एवं नैकसहस्रग्राहकानुग्रहयष्टिमालंब्य परिपुष्टा परितुष्टा विद्वद्वरिष्ठप्रेष्टा च इयं पत्रिका ततः विषयवैविध्येन अर्थवैचित्र्येण भाव-बाहुल्येन भाषासाफल्येन विचारवैपुल्येन रससाकल्येन दोषवैकल्येन गुण-पौष्कल्येन च भिन्नरुचिमपि नानारसमपि वाचककुलं सम्यगाराधयितुम् आनन्दयितुमुल्लासयितुं च शक्नुयात् । ततः 'किमसाध्यं भगवति प्रसन्ने ग्राहकव्रजे' इति वचनमनुसृत्य अचिरादेवैकः स्वतंत्रमुद्रणालयोऽपि सुप्रीत-वाचकवर्गस्य निरवग्रहानुग्रहभूम्ना भवेदेव मधुरवाण्याः । ततः यथाकालं नियतवेलम्-एकदिनम् एकघण्टाम् एकपलमपि—अनतिक्रम्यैव प्रकाश्येत मधुरवाणी । तेन दिनेदिने वाचकाभिवृद्धिः भवेत् ततः सरसलेखकानां भूरि प्रतिफलमपि दीयेत । तेन प्रोत्साहिता उदस्तवृत्तयः समस्त पण्डितलेखकाः पुनर्लेखनीं स्वीकृत्य पुनः रसगंगावतरणमेव कुर्युर्जगतीतले । क्षोणी कोणनिलीना

अभिनव भट्टभाणा विद्यावाचस्पतय: नवपंडितराजा नूतन कालिदासाश्च प्रकाशपदवीमुपगच्छेयु: । पुनस्संस्कृत भाषाया: पुरातनविश्वमोहक जगच्चालक प्रपंचपालक शक्तिदर्शनं सत्वसाक्षात्कार: पुनरेकवारं जगत: संभवेत् । तत: "स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा: "............तत: मधुरवाणी विश्ववाणी मानववाणी........इत्यादि अनेकविचारचक्रभ्रमिभ्राम्य-माणस्य अनन्तचिन्तासन्तानवितानैकतानमानसस्य मम अविदितगतयामा: रात्रय एव विरमन्ति । प्रात: पुन: प्रबुद्ध एव मयि प्राप्ते च अदत्तभने अक्षर-योजके उपगते कागददायके उपस्थिते मुद्रणालयाधिपे आयाते च कार्यालय-गृहस्वामिनि सर्वेष्वपि एक कंठेन धनं प्रदातुं माम् आगृण्हत्सु साप्ताहिकविचार: सुप्त एव भवति मनोमन्दिरे । तदा तेभ्य: " अद्य मध्यान्हे प्राय: सर्वेभ्योऽपि वाचकेभ्य: धनमागच्छति धनादेशद्वारा । अहमपि पत्रप्रापकस्यैव (पोस्टमन्) मार्गं प्रतीक्षमाणोऽस्मि । गच्छत गृहं । अहं मदथमेकां पैकामपि अगृहीत्वा युष्मभ्यमेव सर्वं दास्यामीति प्रतिश्रुत्य समाधाय तान् प्रतिनिवर्तयामि। मध्यान्हे स्वयं पत्रालयं (पोस्टाफीस) गत्वा तत्र विचार्य कैश्चिदपि महोदारै: सुदैवात् यदि किमपि प्रेषितं चेत् गृहीत्वा तद् तावद् आदाय कस्यचित् अत्यातुरोत्तमर्णस्य करकमले निक्षिप्य 'कृष्णार्पणमित्युक्त्वा गृहं प्रत्यागत्य स्नानपान भोजनादिकं करोमि । यदि कदाचित् कस्मिन्नपि दिने कस्मादपि धनं नागतं चेत् 'तद्दिनं दुर्दिनं मन्ये मेघच्छन्नं न दुर्दिनम्' । तस्मिन्-दिने गृहांतरेव क्वचित् कोणे निलीयापि ग्रामांतरं गत: भवामि (गृहजना: मां पृच्छतां तथा कथयंति) तदा कोणांतर्गतस्य मम हृदयकोणे विचार: समुदेति 'यदियं वाणी त्रैमासिकी षाण्मासिकी वा कार्या इति । परंतु परक्षण एव साप्ताहिक विचार: तस्य विचारस्य " स्थितिं नो रे दध्या: क्षणमपि हृदन्तर्ननु सखे " इति तदोच्चाटनं विधाय कोणकुलायै: क्रिमिकीटककुलै: कवलीक्रियमाणं

तत्कोणक्षोणीश्वरं मां "क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ स्वयंतप"। इति समुज्जागरयति। "क्लैब्यं मास्म गमोऽपार्थ (अपरतोऽर्थो यस्मात्) नैतत्त्वय्युपपद्यते" इति प्रोत्साहयति।

मदीयश्चायं विचारः प्रधानसंपादकानां रामाचार्याणां पुरःस्थापितः। पत्रिकाव्यवसायव्ययीकृतजन्मानः ते परिणतप्रज्ञा विहस्य 'मुधा साप्ताहिकाकांक्षी गमिष्यस्युपहास्यताम्। प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः'। दूरेऽस्तु सः साप्ताहिकस्य विचारः। चैत्रांकं भाद्रपदे भाद्रपदांकं च कार्तिके प्रकाशयन्तां पदे पदे प्रतिज्ञाभंगेन वाचकजनविश्वास भंगं कलयतां किं बहुना व्यवस्थितरीत्या मासपत्रमपि संपादयितुमसमर्थानामस्माकं साप्ताहिक संस्कृत पत्र संचालन साहसं 'दुर्लंघ्यं जलधिं तरीतुमनसः पंगोरिदं चापलम्' एव। प्रथमतः भाद्रपदांकस्य सत्वरं कुत्राप्यन्यत्र व्यवस्था कार्या। मम तु मते प्रौढविचारप्रकटनाय साहित्यसौन्दर्य स्वारस्यादिसमास्वादनाय च साप्ताहिकापेक्षयापि मासिकपत्रमेव वरम्। यदि उत्साहश्चेत् दीपावल्यादि प्रसंगेषु विशिष्टांकाः प्रकाश्यंताम् इति स्पष्टं निष्ठुरं च अवदन्। तदाहं तथैव भवतु इति तत्पुरः उक्त्वा अन्यं मुद्रणालयं गत्वा भाद्रपदांकं मुद्रयितुं लेख सामग्रीं प्रादाम्। पंच दशदिनाभ्यंतर एव सर्वमपि मुद्रणं समापनीयमिति सनिर्बन्धमादिश्य गृहमागच्छम्। साप्ताहिक विचारः नाद्यापि दूरीभवति शिरः पिंडात्। प्रधान संपादकास्तु साप्ताहिकापेक्षया मासिकमेव आकर्षकं विचारप्रचोदकं ज्ञानाभिवर्धकं आकारप्रकारमनोज्ञमित्यभिप्रयंति। परंतु अहं पुनः संस्कृतस्य प्रसारदृष्ट्या वाचकसंख्यावर्धनदृष्ट्या संस्कृतभाषाभिरुचि उत्पादनदृष्ट्या च साप्ताहिकपत्रमेव अत्युपयुक्ततममित्यभिप्रैमि। तदत्र एवं समुपस्थिते आवयोरभिप्रायद्वैविध्ये सारासारविचारचतुराणां वाचकनामपेक्षैव प्रमाणम्। यदि सर्वेपि ग्राहकाः साप्ताहिकी एव साधीयसी अस्माकं प्रेयसीति च अभिप्रेयुः तदा एतावतैव ग्राहक वार्षिक धनेन (प्रेषणव्ययस्तुपृथक्)

प्रतिसप्ताहम् प्रारंभे अष्टपुटं क्रमेण च दशद्वादशपुटात्मकमपि अंकं वाचकाना करकमलेषु समर्प्य अनृणी भवितुं इच्छामः । अत्रैव एकः मुद्रणालयाधिपः प्रतिसप्ताहं मधुरवाणीं सज्जीकृत्य दास्यामीति प्रतिजानीते । अतो वाचकाः स्वीयमभिप्रायं निलिख्य निवेदयन्तु सत्वरम् ।

---

# आर्यसंस्कृतिः

लेखक पं. मल्लिनाथशास्त्री हित्तलमनी, संस्कृताध्यापकः,
वसवेश्वर हायस्कूल, वागलकोट

गीर्वाणवाणी ग्रंथा एव आर्यसंस्कृतिप्रभवाः । आर्यसंस्कृतिविकासोपि अमरवाणी ग्रंथेभ्यः संजातः । किं बहुना अशेषदेशभाषाणां जनयित्री देववाणी एव । नास्त्यत्र संशयः । संस्कृतभाषाज्ञानमंतरा देशभाषा ज्ञानं तत्प्रभुत्वं वा न शक्यम् । संस्कृतलिपिः समासयोजना उच्चारानुसारिणी लेखनपद्धतिश्च संस्कृताद् गृहीता एव लक्ष्यन्ते देशभाषासु । देशीय भाषासु नूतनशब्दनिर्माणार्थं संस्कृतभाषासहायम् अपरिहार्यमेव । महाराष्ट्रभाषा प्रभुत्वप्राप्तये सुरवाणीज्ञानम् अनिवार्यम् ।

विबुधवाणीदीर्घव्यासंगिनः महाराष्ट्रदेशस्य अलंकारप्रायाः पंडितप्रवरा भांडारकर दीक्षित वैद्य चिपळुणकर प्रभृतयः संस्कृत साहित्यसेवैकबद्ध-परिकराः नानाविध ज्ञानसंपत्तिहेतुनामस्या भाषायाः व्यंजयामासुः ।

अत एव संस्कृतभाषाध्ययनम् अस्माकम् आद्यं कर्तव्यम् । सकल भरतभूमिः निरंतर सुरभारती परिस्फुरच्चंद्रिका समुल्लासिता भवेत् । प्रसन्नीकृत शारदाः संस्कृत विशारदाः प्राचीनार्वाचीनशास्त्रग्रंथाभ्यासेन आर्याणामस्माकं

संस्कृतिम् उज्वलपरंपरां च रक्षेयुः अस्माकं पूर्वजा आधिभौतिक आध्यात्मिकविद्याविभूषिता जगति उत्तमा आसन्। वयं तेषां वंशजाः। वंशजा इति आत्मानं संबोधयितुमपि वयं न अर्हामः। ईदृशकलंकपरिमार्जनार्थम् ऋषि-समये इव सांप्रतमपि ज्ञानोपार्जने अवहितैः भाव्यम्। तदा एव अस्माकं पुण्या भारतभूमिः भुवि सकलदेशानां धुरि श्लाघनीया संपद्येत।

---

## किर्लोस्कर मासपत्रस्य दिल्ली विशेषांकः

पुरातनकालादारभ्यैव विक्रमैकरसाः खलु महाराष्ट्रीय जनाः। पूर्वं यवनदिल्लीश्वरैः सह्याद्रि कन्दर (उन्दीर) मूषका इति उपहसिता महाराष्ट्र-पुरुषपुंगवाः अद्य भारतसाम्राज्यसूत्राणि स्व पाणिपल्लवतले गृहीत्वा दिल्ली-वल्लभा इव समुल्लसंति। 'दिल्ली सा.ऽतिदवीयसी' — देहली तो बहोत दूर है — इति पुतरानोक्तिं अपमृज्य विश्वविहारिणः महाराष्ट्रकेसरिणः अद्य सधैर्यमुद्गिरन्ति यत् "देहली गृहदेहली"। एवं 'न मे किंचिद् दूरे' इति वीरविश्वासेन उड्डीय भारतराजधानीं गत्वा तत्र च स्व प्रयत्नप्रभावेन मतिविभवेन च परामेव प्रतिष्ठां प्रगतिं प्रसिद्धिं प्रामुख्यं प्राशस्त्यं च प्राप्तवतां सह्याद्रिशैलशार्दूलानां वीरव्यक्तित्वं धीरसाहसं च निदर्शयितुमेव सुप्रसिद्ध किर्लोस्कर मासपत्रसंपादकैः आविष्कृतः अयं 'दिल्ली विशेषांकः'।

अत्र अंके प्रथमतः बहूनामेव भारतीयानां तिरस्कार पुरस्कार पात्रायमाणानां चंडालकुलमंडनमणीनां श्री. अंबेडकर महोदयानां यथार्थ स्वरूपदर्शनं तदीय संभाषणेन स्फुटमेव संपद्यते। सह्याद्रिखनीसमुद्गतनूतन-रत्नानां मंत्रिमंडले विद्युत्प्रभया विद्योतमानानां श्री. गाडगील महोदयानां हास्यरस परिप्लुतः शृंगाररसतरंगितः करुणासकरंबितः नयनीतिबोधकः चित्तवेधकः

चमत्कारकश्च 'हा हंत काव्यं मम' इति लेखः भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् भवति। तथा अर्थमंत्रिणां देशमुख महोदयानां 'वृन्दावन' शीर्षकमेकं सरस सुन्दरं भावगीतम् रसिकवृन्दस्य मन्देतरमेव आनन्दम् उपजनयति। स्वयं चिंतामणि नाम्नां अर्थमंत्रिणां काव्ये अर्थसंपत्तिः सुवर्णवैभवं भावसमृद्धिश्च सविशेषमेव दृश्यंते। अन्ये च श्रीकेसकरप्रभृतीनां विचारप्रचोदकाः लेखाः अस्यांकस्य शोभां वर्धयंति। सर्वैरपि महाराष्ट्रीयैः सर्वथा संग्राह्यः अनुवाच्यश्चायं दिल्ली विशेषांक इति सादरं साग्रहं च संसूचयामः। एतादृशं बृहदाकारं विशेषांकमाविष्कृत्य वाचकानुपकृतवतः किर्लोस्कर संपादकान् तदीयवाचका इव वयमपि सादरमभिनंदामः सानंदं श्लाघामहे च।

---

## संस्कृत भाषायाः अंतःशक्तिः अमरत्व च ।

### पंडित जवाहरलाल नेहरु महोदयानां विचराः

---

कस्माद् दिनादारभ्य संस्कृतभाषा मृतभाषा-सर्वसामान्यजनैः व्यवहारे अनुपयुज्यमाना भाषा इत्यस्मिन् अर्थे-मृतभाषा बभूव इति नाहं जाने । कालिदासकालेऽपि नेयं भाषा जनता भाषा आसीत् । परंतु बहोः कालादेव समग्र एव भरतखंडे एषा सुशिक्षितानां भाषाऽसीदित्यत्र तु विवाद एव न । अनेकशतकपर्यंतं साक्षराणां भाषात्वं भजमाना एषा न केवलं भारते परंतु भारताक्रांतेषु एष्याखंडस्य आग्नेयभागेषु मध्येष्याप्रदेशेष्वपि प्रससार । अत्र बहून्येव उदाहरणानि कागद-पत्राणि संति । कांबोडिया देशे सप्तम-शतकस्य कानिचन संस्कृत पद्यानि नाटकान्यपि च समुपलभ्यंते । सयामदेशे तु अद्यापि संस्कृतमेव कतिपयजीवन संस्कारक्रियासु उपयुज्यते । भारते तु संस्कृतस्य प्रभावः आश्चर्यकारक आसीत् । त्रयोदशे शतके अफगानदेशतः यदा तुरुष्का आगत्य दिल्लीसिंहासनमाक्रम्य आरुह्य च शासितुमुपाक्रमंत तदा पर्षियन् भाषा एव राजभाषा बभूव । बहव एव हि संस्कृतं परित्यज्य भारतीयाः तामेव पर्षियाभाषां अभ्यसितुं प्रारभंत । तथापि तदापि संस्कृतं गौरवस्थाने एव आसीत् । इसवीय १९३७ तमे वर्षे त्रिवेंद्रं नगरे संमिलितायां प्राच्यविद्यापरिषदि अध्यक्षस्थानापन्नः डा. एफ. एफ. थॉमस महोदय एव माह यत् "कन्याकुमारीत आरभ्य काश्मीरपर्यंतं समग्रभारतस्य एकमात्रं संघटना साधनं नाम संस्कृतभाषा एव । अद्यापि तस्या सार्वत्रिकप्रसारोपयोगाः अस्मिन् देशे सन्ति । मम तु मते अतीव सरलतम मूल संस्कृतमेव भारतस्य एक मात्रराष्ट्रभाषात्वेन आदरणीयं अंगीकरणीयं च । अत एव हि मोक्षमुल्लरोपि यस्याभिप्रायः मम संपूर्णमेव संमततमः— एवं स्पष्टमकथयत् यत ।

"भारते यद्यपि बहून्येव परकीयाक्रमणानि सामाजिकसुधारणानि धार्मिकांदोलनानि च भूयः संवृत्तानि। तथापि तत्र पूर्णभूतवर्तमानकालयोरंतरं निरंतरं विलोपयन्ती बहोः पूर्वकालादारभ्य अद्ययावत् अविच्छिन्नैकप्रकारेण एकरूपेण विद्यमाना विद्योतमाना च संस्कृतभाषा सर्वत्रापि विशालस्य भारत-वर्षस्य कोणे कोणे सर्वैरपि ज्ञायते। अद्यापि शताधिकवर्षेभ्यः आंग्लभाषायाः ईदृशसर्वग्रासिन्यां प्रसारणायां जातायामपि डॉटे महाशयस्य काले ल्याटिन-भाषायाः युरोपखंडे यावान् प्रचार आसीत् तदपेक्षयापि बव्हंशेन समधिकमेव प्रसारमद्य भारते संस्कृतभाषाया अस्ति"।

दक्षिण भारते विशेषतः संस्कृतं जानतां जनानां संख्या भूयसा दृश्यते। हिंदी, बेंगाली, गुजराथी, मराठी प्रभृतिभाषासु यां कामपि वा भाषां सम्य-गभिजानन् यः कोपि वा सामान्यमनुष्यः अनधीतसंस्कृतोपि सरळतमं संस्कृतं ज्ञातुं शक्नोति। अन्यच्च उर्दूभाषापि प्रायः शते अशीति ८० संख्याकान्-संस्कृतोद्भवानेव शब्दान् संधत्ते। अनेकशः बहूनामेव शब्दानां मूलं किं संस्कृतं उत पर्षियन् भाषा वा इति निर्णयः दुष्कर एव भवति एकविधत्वात् उभय-भाषायोरपि शब्दमूलस्य। अत्र अतीव आश्चर्यस्य विषयो नाम द्राविडभाषाणां मूलं प्रवृत्तिः पद्धत्यादयो नियतं संस्कृतततो विभिद्यन्ते। तथापि तासु अपि संबंधशून्यासु द्राविडभाषासु अर्धाधिकाः शब्दा संस्कृतशब्दा एव सन्ति।

संस्कृत साहित्ये नाटकादिनैकविषयानवलंब्य ग्रंथलेखनम् मध्ययुगे पूर्वयुगे अर्वाचीनकालपर्यंतमपि अविच्छिन्नतया प्रचलितमासीत्। नूनमद्यापि तथाविधाः ग्रंथाः तदा तदा गोचरीभवंत्येव। आश्चर्यकरं नाम संस्कृते सामयिक-पत्रिका अपि अद्यापि तत्र तत्र प्रचलंति। परंतु तेषां प्रणाली योग्यता च संस्कृतभाषाभांडारस्य श्रियमभिवर्धयितुं नालं भवन्ति। यदा कदाचित् सभाः अपि संस्कृते एव संबोध्यंते परिमितेषु प्रमितेषु च सभासत्सु।

इदमत्र कुतूहलमुपजनयति यत् इदानीमपि सयामदेशे यदा नवीनतया यांत्रिकाः तांत्रिकाः राज्यशासनावश्यका वा शब्दाः पाश्चात्यशब्देभ्यः स्वभाषायां गृहीतव्या आपतंति तदा ते निःशंकं संस्कृत शब्दानेव गृण्हन्ति।

प्राचीनकाले भारतीयाः नादस्य प्राधान्यं ददुः। अतः एव तेषां गद्यपद्येषु छंदःसौंदर्यं संगीतस्वारस्यं च अंतर्भूतं दृश्यते। शब्दानां यथार्थोच्चारणार्थं सविशेष एव प्रयत्नः अनुष्ठित आर्यैः। तदर्थमेव स्वतंत्रनियमानुशासनमपि-विहितमास्ते। तदा अध्ययनाध्यापनयोः मौखिकत्वात् समग्रग्रंथराशीनामेव वंशपरंपरया स्मरणशक्त्यैव संगृह्य तथैव पुरस्तनसंततेः प्रदीयमानत्वाच्च तदा ईदृशोच्चारणनिर्बंधनमावश्यकमेवासीत्। अस्मिन्विषये ई. एच्. जोनस्टन् नामकः विद्वान् एवं लिखति यत्। "पुरातन भारतीय कवीनां नादवैविध्यविशेषाणां ध्वनितरंगप्रकाराणां च असाधारणमेव सूक्ष्मज्ञानमासीत्। शब्दोच्चारण-तदर्थानां च मधुरसंगमे महानेव आनंदः स्फुरति यश्चान्यदेशीय साहित्ये अतीव दुर्मिलः। अस्यां दिशायां निरर्थकप्रयत्ना आपि जाता यत्र काव्यसत्वमेव विलुप्तमवभासते। कतिपयविद्वांसस्तु मिताक्षरैः एकाक्षरै र्वा नीरसश्लोकान् विरच्य पांडित्यं प्राचीकटन्"।

अद्यापि वेदपारायणम् सर्वत्रापि सहस्राधिकवर्षेभ्यः पूर्वं यैः नियमैः यैः प्रकारैः यया रीत्या यथा अनुष्ठीयते स्म तथैव क्रियते। तत्र पूर्वतनानुपूर्व्या शब्द-स्वर-मात्रा-गति-लयादिषु उच्चारणप्रकारे वा न किंचिदपि अंतरमास्ते परोक्षकालात् प्रत्यक्षे।

अद्य भारते आर्यहिंदू (Indo-Aryan) भाषा इति प्रसिद्धाः हिंदी, उर्दू, बेंगाली, मराठी, गुजराथी, ओरिया, आसामी, राजस्थानी, पंजाबी, सिंधी पुश्तू, काश्मीरी इत्यादि सुप्रसिद्धाः औत्तरेयभाषा सर्वा अपि संस्कृतमातुः संततयः एव। तथैव दक्षिणदेशे प्रचलंत्यः तमिल, तेलगु, कन्नड,

मलयाळी प्रभृति भाषाः द्राविडभाषा इत्यभिधीयन्ते। एतासु सर्वासु अपि दाक्षिणात्य भाषासु संस्कृतशब्दाः एव ओतप्रोताः दृश्यन्ते। भारतस्य सीमाप्रांते (Frontior Province) तथा अफगानस्थानेऽपि अद्य भाष्यमाणा सुप्रसिद्धा 'पुस्तू' भाषा मुख्यतः संस्कृतादेव समुद्भूता। अस्याः संस्कृत-जन्यभाषायाः उपरि पर्शियन् भाषायाः प्रभावः इतरभाषापेक्षया अधिकः एव बभूव। अस्मिन् प्रांते प्राक् बहवः एव संस्कृत पण्डिताः बभूवुः। सिलोनस्य राष्ट्रीयभाषा सिंघली नाम्नी आस्ते। इयमपि हिंदू-आर्यभाषा साक्षात् संस्कृतसमुद्भवा एव। सिलोनजनाः भारत वर्षतः न केवलं बुद्धधर्ममेव अगृण्हन् किंतु भारतीय भारतीमपि स्वीकृतवंतः। विदितमेव इदं विश्वेषामपि विदुषां यत् यु ोपखंडस्य प्राचीन अर्वाचीन उभयविधभाषाणामपि संस्कृतेन घनिष्ठः सबंधः वरीवर्ति इति।

---

## मैथिलीपते

ले. कवितावल्लभः पण्डित श्री. सुन्दरगोपालाचार्यः पुत्तमंगलम्.

मम विधेहि शं मैथीलीपते ! श्रितजनव्रजत्राणदिक्षित।
दृढतमोगुणस्त्यानचेतसां करुणयाज्ञतां त्वं निराकुरु ॥ ॥१॥
दलितपंकजस्पर्धि ते मुखं ललितकुंतलस्पर्श सुन्दरं।
चलितकुंडलप्रोल्लसत्प्रभं दलितनैऋत ! दृश्यते मुखम् ॥ ॥२॥
शतमखोपलस्पर्धिमेचकं ! शतमखादिभिर्नित्यसेवितम्।
शतमखात्मजायुष्करप्रभो ! शतमहो समास्त्वां विचिंतये ॥ ॥३॥
दहनसंचयैर्दीपिता भृशं शिशुवरांगनाः शातिताःप्रभो।
प्रलयधूर्जटेरिव भयाकुलाः श्रुतवतो ममाच्छिद्यते मनः ॥ ॥४॥
कुलमिदं प्रभो त्वन्मुखोद्भवं कलिकृतात् भयात् क्षीयतेऽधुना।
यदपि हा भवान् दैवतं ममेत्यकथंयत् पुरा तद्धि दृश्यताम् ॥ ॥५॥

# कविता-कामिनी कौतुकाय

न कारणमपेक्षंते कवयस्तोतुमुद्यता: ।
किंचिदस्तुवतां तेषां जिव्हा फुरफुरायते ॥ ॥१॥

वर्णयंति नराभासान् वाणीं लब्ध्वापि ये जना: ।
लब्ध्वापि कामधेनुं ते लांगले विनियुंजते ॥ ॥२॥

गृहिणी भगिनी तस्या: श्वशुरौ श्याल इत्यपि ।
प्राणिनां कलिना सृष्टा: पंच प्राणा इमे परा: ॥ ॥३॥

मातुलस्य बलं माता जामातुर्दुहिता बलम् ।
श्वशुरस्य बलं भार्या स्वयमेवातिथेर्बलम् ॥ ॥४॥

गृहिणी स्वजनं वक्ति शुष्काहारं मिताशनम् ।
पतिबंधूस्तु बव्हाशान् क्षीरपांस्तस्करानपि ॥ ॥५॥

वाच्यतां समयोऽतीत: स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रंथे काठिन्यं कुत्र वर्तते ॥ ॥६॥

अगतित्वमतिश्रद्धा ज्ञानाभासेन तृप्तता ।
त्रय: शिष्यगुणा: ह्येते मूर्खाचार्यस्य भाग्यजा: । ॥७॥

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वच:
झटिति प्रतिवक्तव्यम् सभासु विजिगीषुभि: ॥ ॥८॥

ससंभ्रमो विलज्जत्वमवज्ञा प्रतिवादिनी ।
हासो राज्ञस्तवश्चेति पंचैते जयहेतव: ॥ ॥९॥

उच्चैरुद्घोष्य जेतव्यं मध्यस्थश्चेदपंडितः ।
पंडितो यदि तत्रैव पक्षपातोऽधिरोप्यताम् ॥ ॥१०॥

वागान् केचित् ग्रहान् केचित् केचिदक्षाणि जानते ।
त्रितयं ये विजानंति ते वाचस्पतयः स्त्रयम् ॥ ॥११॥

मंत्रभ्रंशे संप्रदायः प्रयोगश्च्युतसंस्कृते ।
देशधर्मस्त्वनाचारे पृच्छतां सिद्धमुत्तरम् ॥ ॥१२॥

जपमाला सदा हस्ते मध्ये मध्येऽक्षिमीलनम् ।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्यय हेतवः ॥ ॥१३॥

कौपीनं भसितालेपः दर्भा रुद्राक्षमालिकाः ।
मौनमेकासनं चेति मूर्ख संजीवनानि षट् ॥ ॥१४॥

विस्मृतं वाग्भटेनेदं तुलस्याः पठता गुणान् ।
विश्वसंमोहिनी वित्तदायिनीति गुणद्वयम् ॥ ॥१५॥

शुष्कोपवासो धर्मेषु भैषज्येषु च लंघनम् ।
जपयज्ञाश्च यज्ञेषु रोचंते लोभशालिनाम् ॥ ॥१६॥

यत्रासीदस्ति वा लक्ष्मीः तत्रोन्मादः प्रवर्तताम् ।
कुलेप्यवतरत्येषः कुष्ठापस्मारवत् कथम् ॥ ॥१७॥

जामातुर्वक्रता तावत् यावत् श्यालस्य बालता ।
प्रबुध्यमाने सारल्यं प्रबुद्धे तु पलायनम् ॥ ॥१८॥

भार्या ज्येष्ठा शिशुः श्यालः श्वश्रूःस्वातंत्र्यवर्तिनी ।
श्वशुरस्तु प्रवासी च जामातु र्भाग्यकारणम् ॥ ॥१९॥

॥ श्रीशं वन्दे ॥

## संस्कृतसाहित्ये गद्यकाव्यविरलतायाः कारणम् ।

लेखकः- म. पं. वासुदेवाचार्य वागेवाडी करशास्त्री
( काव्य-तर्क-वेद-तीर्थ साहित्याचार्यः, आयुर्वेदाचार्यः )

( अखिल भारतीय प्राच्यविद्यापरिषदो मुम्बापुर्या जाते पञ्चदशाधिवेशने विचारार्थं प्रस्थापितोऽयं प्रबन्धः )

---

सर्वेषां जीवानां "सर्वदा मे सुखमेव स्यात् । न मनागपि दुःखम्" इति प्रवृत्तिः स्वभावत एव वर्तते । तच्च दुःखलेशेनापि विरहितं नितान्तं सुखं कथं प्राप्तव्यमित्यजानतां तेषां प्रबोधाय शास्त्राणां प्रवृत्तिः । तद्धि शास्त्रं प्रकृष्टज्ञानगम्यम् । ज्ञानविषयत्वान्मानव एव तदधिकारी । स च तादृक् सुखमनुभवितुमर्हति । तेनैव सुखं साधनीयं नाम चतुर्विधपुरुषार्थाः साधनीयाः । ते च यथा धर्मार्थकाममोक्षाः ।

प्रथमं तावत् काव्यशास्त्रं चतुर्विधपुरुषार्थावाप्तिसाधनं न वेति बिचारणीयम् । ततश्च सत्सु वेदान्त दर्शनादिशास्त्रेषु तत्साधनंभूतेषु काव्यशास्त्रस्य किं वा प्रयोजनमिति विचारः कार्यः ।

अस्मिन् विषये दर्पणकारः विश्वनाथपण्डितः प्राह—"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि । काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥" इति ।

धर्मार्थकाममोक्षाणां प्राप्तिः रामादिवत् प्रवर्तितव्यमिति कर्तव्यस्य प्रवृत्तेः न रावणादिवदित्यकर्तव्यस्य निवृत्तेः उपदेशद्वारा परिणतबुध्दीनां सुकुमारमतीनामपि विनायासं काव्यादेव भवति नान्यस्मात् ।

तथा च काव्याद् धर्मप्राप्तिः श्रीभगवच्चरणारविन्दस्तवनादिभिः। "एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके कामधुग्भवति" इत्यादि श्रुतिभ्यः सुप्रतीतैव। धनप्राप्तिर्हि भूपादिधनिनस्तवनपरैः काव्यादिभिः कवीनां प्रत्यक्षसिद्धैव। कामयते इति कामः। नाम विषयभोगः। धर्मादर्थस्ततः कामः कामात्सुखसमुन्नतिः" इति स्मरणात्। काम प्राप्तिश्चार्थद्वारेणैव भवति। मोक्षप्राप्तिस्तु काव्यजन्य धर्मफलस्याननुसन्धानात् उपनिषदादिषु व्युत्पत्याधायकत्वाच्च सुशक्यैव। चतुर्वर्गलाभस्तु नीरसत्वात् परिणतबुद्धीनामेव वेदशास्त्रेभ्यो जायते। तच्चायासेनैव। परं विनायासं परिणतबुद्धीनां सुकुमारमतीनामपि काव्यादेव भवति। परमानन्दसन्दोहजनकत्वात्।

ननु सत्सु वेदशास्त्रेषु परिणतमतिभिः किमिति काव्येप्रयत्नो विधेय इति चेत् कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्। काव्यस्योपादेयत्वमग्निपुराणादिष्वपि साधितम्।

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा॥"
"काव्यालापांश्च ये केचिद्गीतकान्यखिलानि च।
शब्दमूर्तिधराश्चैते विष्णोरंशा महात्मनः॥"

एवं च प्रौढमतीनां सुकुमारमतीनां च सर्वेषां विनायासेन धर्मार्थकाममोक्षाणां प्राप्तिः काव्यादेव भवति इति प्रतीयते।

एतत्तु काव्यं दृश्यश्रव्यभेदाद् द्विविधम्। तत्र श्रव्यं पद्यगद्यमयं द्विधा।

सुपरिचितमेव सर्वेषां विदुषां यत् संस्कृत साहित्ये पद्यमयानां काव्यानां रचनाभूयस्त्वेऽपि गद्यमयानां तेषामत्यन्तं संकुचित एव संग्रहः। दशकुमार चरितम्, हर्षचरितम् कादंबरी, वासवदत्ता, तिलकमञ्जरी, गद्यचिन्तामणिः

इत्येतानि खलु गद्यकाव्यानि सम्प्रति समुपलभ्यंते वीरनारायणचरितम्, भट्टारहरिचन्द्रगद्यकाव्यम्, तरङ्गवती, त्रैलोक्यसुन्दरी, अगस्त्यकविकृतं श्रीकृष्ण चरिताख्यं गद्यकाव्यं इत्येतानि कानिचिद् समधिकानि गद्यकाव्यानि श्रुतिपथ मापतन्ति किल। एवं सङ्कलितानि सर्वाणि गद्यकाव्यानि पञ्चदशाभ्यधिकानि न संभवन्ति। अहो कियदिदमाश्चर्यं नाम यदपारे संस्कृतसाहित्यसागरे सन्त्येतादृशा एव कतिपये गद्यकाव्यग्रन्था:।

किं वा स्यादस्य गद्यकाव्यस्य विरलताया: कारणम्। अत्र खलु वहवो बहूनि कारणान्युदाहरन्ति।

तथा हि—प्रतिबिम्बं किल, इदमनल्पकल्पनाचतुरस्य सन्तुष्टस्य सहृदयस्य, यत्साहित्यकलासमुल्लासो नाम। सति च मानवस्य कदाचिदानन्दे-वेत्तुरवेत्तुर्वा सुभगस्य दुर्भगस्य वा सुस्वरमपस्वरं वा सुमधुरममधुरं वा संगीतरूपेणव समुद्भवति नाद इति प्रत्यहं प्रत्यक्षत एवानुभूयते। संगीतकला साहित्यकला चेति सहजे एव भगवत्या: सरस्वत्यास्तनूजे। सति चैवं असामान्यस्फुरण-चतुराणामार्याणामानन्दभरभरितानामन्तरङ्गादाविर्भवन्ती भगवती भारती कथंकारं वत निसर्गरमणीयां विहाय पद्यरूपतामन्यथा पुनरात्मानं प्रकाशतां नयेत्। यत: पद्यात्मना परिणमन्ती खल्वियं भारती गानसुलभत्वमावहन्ती कामपि रसास्वादतां जनयति सहृदयस्य हृदयाभ्यन्तरे। पद्यं हि नाम काव्यालङ्कारामृतरसस्य मानससागरेऽपर्याप्तस्य कोऽपि निसर्गत: प्रवहन् प्रवाह एव। एवं च विचार्यमाणे संस्कृतसाहित्ये निसर्गतया युक्तमेव पद्यबन्धानां वाहुल्यम्" इति।

अत्र त्वपरे व्याहरन्त्येवम्, यत्, गद्यबाहुल्यं तदव खलु भवेत्' यदा भाषा लोकव्यवहारेषूपयुज्येत। नेयं संस्कृतभाषा कदापि तथाऽऽसीत्।

अत एव चास्याः संस्कृतपदेन व्यपदेशः। सम्यक् कृता संस्कृता परिष्कृता इति यावत्। लोकव्यवहारभाषाभ्यो विविधाभ्यो विद्वद्भिः प्रबन्धगोचरतया कामपि व्यवस्थामापादिता सेयं संस्कृतभाषा। अखिलेष्वपि लोकव्यवहारेषु सततमुपयुज्यमाना भाषा प्राकृतभाषेति संज्ञां प्राप। यतः प्रकृतिर्नाम स्वभावः। प्रकृतिसिद्धा भाषा प्राकृतभाषा। अस्या भाषाया मागधी शूरसेनीत्यादिव्यपदेशो देशभेदेन युक्तः।

"सकलजगज्जन्तूनां व्याकरणादिभिरनाहितसंस्कारः सहजो वचनव्यापारः प्रकृतिः। तत्र भवं सैव वा प्राकृतम्। "आरिसवअणे सिद्धं देवाणं अद्धमागहा वाणी" इत्यादिवचनाद्वा प्राक् पूर्वं कृतं प्राकृतं बालमहिलादि सुबोधं सकल भाषानिबन्धनभूतं वचनमुच्यते। मेघनिर्मुक्तजलमिवैकस्वरूपं तदेव च देशविशेषात् संस्कारकरणाच्च समासादित विशेषं सत् संस्कृताद्युत्तरविभेदानाप्नोति। अत एव शास्त्रकृता प्राकृतमादौ निर्दिष्ठं तदनु संस्कृतादीनि। पाणिन्यादि व्याकरणोदितशब्दलक्षणेन संस्करणात् संस्कृतमुच्यते" इति नमिसाधुर्वक्ति। अनेनैव हेतुना संस्कृतसाहित्ये गद्यरचनाविरलत्वं वरीवर्ति। इति।

अथेदमुत्प्रेक्ष्यतेऽधुना मया। छन्दोबद्धा भारती संगीतसहाया सती विद्यमानेऽपि कंचिद् वैगुण्ये संनिवेशविशेषात् सर्वाङ्गसुन्दरीव भासमाना कामिनीव चित्तमाकर्षति प्रेक्षावतामिव शृण्वतां सहृदयानाम्। स खलु-स्त्रीत्वस्येव, अनुप्रासाद्यलङ्कारोपहतस्य यत्यादिगुणगुम्फितस्य छन्दोबद्धस्य महिमा-यदापातमाधुर्यचञ्चलस्य नानसस्य वर्तमानोऽपि भावादिविलासाभावो न सद्य एव विचारसरणीमधिरोहति। इदमेव हि बीजं छन्दोबद्धकाव्यानां प्ररोचकम्। को नु खलु काव्यपदवीमवतीर्णो झटित्यात्मनः स्खलनं निगूहन्तं पन्थानं न प्रपद्येत। सर्व एव जगति सुलभं सुकरं चात्मनीनमध्वानमभिलषति।

गद्यस्य तु नास्ति खलु पुरुषस्येव स्वाभाविकं मनोहारि सौन्दर्यं येन सहृदयस्य हृदयं रसयितुमनसः कवेस्तत्राप्रतिबन्धा प्रवृत्तिर्जायेत। इदं च सर्वेषामनुभवसिद्धमेव। यत्, चतुरमतिना महाकविना सविशेषं परिष्कृतस्य गद्यकाव्यस्य निगुणमलंकृतस्य प्रयोगचतुरस्य सरसो विलासवत्या भ्रूभङ्गस्येव सहस्रगुणं पद्यकाव्यादपि साधयन्नुत्कर्षमक्लेश सहजं रञ्जयति रसिकानामनन्यवृत्तीन्यन्तःकरणतत्त्वानि। को नु खलु रसिकः कादम्बरी रसमनुभवन्नाघूर्णितलोचनः सरसेन पद्यकाव्येन सममिमां तोलयितुं क्वचित् ततोऽप्यधिकां नानुमन्येत। भवतु। एवं च गद्यकाव्यप्रपञ्चसर्गोऽय चतुरधीसाध्यश्च समधिकक्लेशावहश्च। अत एवात्राल्पीयसी प्रवृत्तिर्दृश्यते। को नु खलु यशोमात्रकाङ्क्षी कविः सुकरम् सुखाकरम् मार्गं परित्यज्य क्लेशभूयिष्ठम् दुर्गमम् पन्थानम् प्रतिपद्येत। एतत्तु परम् विषादास्पदम् सरस्वतीसारज्ञा रसज्ञा आकुलीकृतजगत्त्रया जगदुपकारपरा अपि कालिदासप्रभृतयो महाकविवरा गद्यकाव्यनिर्माणे नादरं प्रादर्शयन्निति।

यत्त्वभिधीयतेऽनया गीर्वाणवाण्या लोकव्यवहारोपयोगित्वाभावादेव गद्यकाव्यस्य विरलत्वमिति सोऽयं वदतो व्याघातः। यतो यदीयं भाषा व्यवहारे नाभविष्यत् ततोऽस्या भाषात्वमेव कथं प्रासेत्स्यत्। सम्प्रत्यपीयं व्यवहारेषु समुपयुज्यमाना संदृश्यते। बहवो विद्वांसो गीर्वाणवाण्या व्यवहरन्तोऽद्यापि समुपलभ्यन्ते। स्वाभिप्रायमन्यान् बोधयितुमुपयोजितः कश्चनोपायो नाम भाषा। एतादृशं भाषात्वं वेदेषूपनिषत्सु च प्रतीयते। अन्यच्च विविधानां धार्मिकसामाजिकराजनैतिककार्याणां सर्वेषां सर्वे व्यवहारा अनयैव भाषया पुरा सम्भूवन्निति विज्ञायत इतिहासतः। एते ते सर्वे व्यवहारा मनुयाज्ञवल्क्यादीनां पुरातनानां स्मृतिभिर्मिताक्षरादिभिर्निबन्धग्रन्थैश्च विधिनिषेधाभ्यां विहिताविहिताश्च बहोः कालात् प्रचलन्ति। सर्वेऽपि व्यवहारग्रन्थाः संस्कृतभाषयैव प्रथिताः

सन्त्यासंश्च। न्यायदानादि तदितरं च सर्वं कार्यजातं राजशासनं संस्कृत-भाषाप्रधानमिति निश्चितं भवति। अन्यथा राजनीति प्रतिपादकाः प्राकृत-भाषाप्रधाना ग्रन्थाः कथं नोपलब्धाःस्युः।

तुष्यतु न्यायेन आस्तां तावदस्या लोकव्यवहारानुपयुक्तत्वम्। तेन कथं नाम गद्यविरलत्वमेवापद्यंत। व्यवहारानर्हयाऽनया गीर्वाणभाषयाप द्यकाव्यानामिव गद्यकाव्यस्य भूयसीं निर्मितिं किं नु प्रतिबध्नीयात्। समं हि किल गद्यपद्यानां प्रतिबंधकत्वं। कोयं विशेषोऽत्र यश्च पद्यानां प्रभविष्यति गद्यानां चोपहनिष्यति। एवं च व्यवहारानर्हत्वं हि संस्कृतभाषायाः काव्यस्य गद्यमयस्यैव भूयस्या उत्पत्त्याः प्रतिबन्धककारणं नैव खलु विदुषामादरास्पदम्।

प्राक् कृतं प्राकृतमित्यादि प्राकृतसंस्कृतपदार्थनिर्वचनं यत्कृतं तत्तु न सर्वथा समीचीनम्। यतः, "अथ प्राकृतम्" अस्य प्राकृतव्याकरणस्य सूत्रस्याचार्यहेमचन्द्रसूरिभिः, सिद्धहेमचन्द्राभिधानत्वोपज्ञशब्दानुशासनवृत्तौ एवं विवरणं कृतम्, "अथशब्द आनन्तर्यार्थोऽधिकारार्थश्च। प्रकृतिः संस्कृतम्, तत्र भवं तत आगतं वा प्राकृतम्। संस्कृतानन्तरं प्राकृतमधिक्रियते। संस्कृतानन्तरं प्राकृतस्यानुशासनम्। सिद्धसाध्यमानभेदसंस्कृतयोनेरिव तस्य लक्षणं न देश्यस्येति ज्ञापनार्थं संस्कृतसमे तु संस्कृतलक्षणेनैव गतार्थम। प्राकृते च प्रकृतिप्रत्ययलिङ्गकारकसमाससंज्ञादयः संस्कृतवद् वेदितव्याः" इति।

तथा च "प्रकृतिः संस्कृतं तत्र भवत्वात् प्राकृतं स्मृतम्" इति प्राकृतचन्द्रिका। "प्राकृतस्य तु सर्वमेव संस्कृतं योनिः" इति प्राकृतसञ्जीवनी। "शेषं संस्कृतवत्" इति कात्यायनः। तस्मात् संस्कृतवद् विभक्तयः"। इति श्रीचण्डः। एवं नैकैः प्राकृतभाषापण्डितैस्तद्व्याकरणग्रन्थकृद्भिर्विद्वद्भि-र्मुनिभिर्मान्यतमैराचार्यैः सूत्रकारैश्च यत् प्राकृतसंस्कृतपदार्थनिर्वचनं कृतं तेन

संसिध्यते सर्वासां प्राकृतभाषाणां जननीत्वं संस्कृतभाषायाः । संस्कृतभाषा तु प्रकृतिः । तत्र भवं तत आगतं वा प्राकृतम् । अनेन निर्वचनेन प्राकृतस्य संस्कृतं कारणम् । न तु संस्कृतस्य प्राकृतम् । बालमहिलादिसुबोधं प्राकृतमिति नमिसाधुवचनं समीचीनम् । यतो बालमहिलादीनां प्राकृतजनानां संस्कृतं दुर्गमं दुर्बोधं दुर्वाच्यं दुष्पाठ्यम् च प्राकृतं तु तेषां सुगमं सुबोधं सुवाच्यं सुपाठ्यम् च । अधुनाऽपि सर्वत्र प्रान्तभाषाणां प्राकृताप्राकृतजनानां संभाषणादिषु द्वैविध्यं प्राकृताप्राकृतात्मकं सर्वेषां भाषापण्डितानां सुविदितमेव । प्राकृतव्याकरणाचार्याणां प्राचीनपण्डितानां संस्कृत प्राकृत शब्दनिर्वचनेनैव श्रीनमिसाधुवचनं निरस्तम् । तत्र मम वचसोऽवकाश एव नास्ति ।

पद्यस्य नैसर्गिकरमणीयत्व प्रतिपादनेन गद्यस्य भूयस्त्वाभावो यः समर्थितः स नाभिमततरः । यतस्तथाङ्गीकारे कृते सर्वस्य गद्यस्यनैसर्गिकत्वमभ्युपेयं स्यात् । परं गद्यकाव्यभूतानामुपनिषदां न कोऽपि सहृदयः कृत्रिमत्वं ब्रूयात् । तत्र तु गद्यवाणीनां विलासः, सरसः, मधुरः, ललितः, नैसर्गिकः, प्रसन्नश्च ।

एवं चेयं गद्यकाव्यनिर्माणसरणिश्चतुरतरधीसाध्या समधिकतरक्लेशावहा च । पद्यकाव्यनिर्मितिमार्गस्तु न तथा । संस्कृतसाहित्ये गद्यकाव्यविरलत्वेऽयमेव मदुक्तो हेतुर्वरीयानिति स्फुटमेव सर्वेषां विदुषाम् । इत्यलं पल्लवितेन ।

---

## मधुरवाणी शुभाशंसनम्

आशंसकः— पं. शैलेंद्रसिद्धनाथ पाठकः— अंजडबडवानीः (मध्यभारत)

इयं शिक्षावल्ली प्रवचनसुधामोदमधुरा ।
सतां सूक्तेः शश्वद् गुणगण सुपुष्प प्रसविनी ॥
विकासं पुष्यन्ती भरतवसुधांबालहृदये ।
"तमसो मा ज्योतिर्गमय" शिवमात्रं विदधतु ॥

# "अनामिका सार्थवती बभूव !"

— रित्ति श्रीनिवासः —

---

स्थाने खलु सहृदयेन मल्लिनाथसूरिणा यदुक्तम्-

"कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षात् विदुर्नान्ये तु मादृशाः ॥"

इति महाकवेः कालिदासस्य प्रतिभामधिकृत्य न केवलं भारतीयसाहित्ये, अपि तु जगतः साहित्यक्षेत्र एवात्युन्नतममरस्थानमवाप्तमनेन कविचक्रचूडामणिना । अनेन च प्रणीतानि मालविकाग्निमित्रेत्याद्युत्कृष्टानि रूपकाणि रघुवंश-कुमारसंभवेत्यादि सुललितपदविन्यासानि काव्यानि च । अस्य कविकुलगुरोः कालिदासस्य 'अभिज्ञानशाकुन्तलम्' तु प्रशंसितं भारतीयैरन्यदेशीयैश्च । शकुन्तलायाः सौन्दर्यमास्वादयता जर्मन् देशीयेन 'गटे' महाकविना उदीरितमेवं हर्षोत्कर्षेण —

"Wouldst thou the heaven and earth itself
in one soule name combine ?
I name thee O Shakuntala, and
all at once is said"

इति ।

पात्रनिरूपणे अतिकुशलः कालिदासः । देवकन्यकाया ऊर्वश्याः पात्रमेवात्र निदर्शनम् । सत्यं उर्वशी गन्धर्वकन्यकेति, किन्तु मानवसहजैर्गुणैः न रहिता सा । मानवं राजानं पश्यन्त्येव तमकामयत । पुरूरवा एव अस्याः सर्वस्वं, स एव देवस्तस्याः, तस्य वागेवामृतोपमा तस्याः । उच्यते च तया पुरूरवसो वचनं श्रुतवत्या— "अभिजातं खल्वस्य वचनम् । अथवा

चन्द्रादमृतमिति किमत्राश्चर्यम्" इति। पुरूरवसो विरहो न सह्यते तया—अतीवोत्कण्ठिता च सा पुरूरवसं प्रति गन्तुम्—"सखि, मदनः खलु त्वामाज्ञापयति, 'शीघ्रं नय मां तस्य सुभगस्य वसतिम्' इति वदति सा चित्रलेखाम्। एवं पुरूरवसं प्रति प्रेमपूर्णयाऽपि तया नासूयते तस्य देव्यै। "स्थाने खल्वियं देवी शब्देनोपचर्यते। न किमपि परिहीयते शच्या ओजस्वितया" इति तां प्रशंसत्येव। न क्षणमपि पुरूरवसः सकाशाद् गन्तुमाकांक्षते सा। आत्मनः पुत्रकस्यायुषः विषयं श्रुतवत्या तया रुदत एव—महेन्द्रस्याज्ञां स्मृत्वा। न चेष्टमस्याः पुरूरवसं त्यक्त्वा महेंद्रं गन्तुम्।

पुरूरवसः पात्रमपि नावरम्। धीरोदात्तः सः। धैर्यसाहसादिगुणाः वर्तन्ते एव अस्मिन्नृपे। "न खलु एष अकृतार्थो निवर्तिष्यते" इति तस्य शौर्यं मेनका प्रशंसति। अस्मिन्नाटके तु प्रथमतः पुरूरवाः प्रेमजाले पतति। प्रतिक्षणमुर्वशीसन्निधिमेवापेक्षते सः। चतुर्थेऽङ्के च तस्यैकभाषितं संस्कृत-साहित्य एव अद्वितीयं वर्तते।

'भारतीयशेक्सपीयरस्य' कालिदासस्य शकुन्तला मूर्तिमत् सौन्दर्यमिव तिष्ठति। 'अव्याजमनोहरं वपुः' धारयन्ती सा वनबालिका विनयसंपन्ना च। प्रथमदर्शन एव राजानं दुष्यन्तं कामयन्त्या तया न खलु प्रकटीक्रियते तत्। ततश्च सुखे वा दुःखे वा अविचलितचित्ता भवति सा। शापोपहतचेताः राजा दुष्यन्तो दूषयति ताम्। न खलु दूषयति सा तं राजानम्। ततश्च राज्ञा, स्वजनैश्च विप्रलब्धा, मेनकया स्वर्गमानीता साऽत्मनः पत्युर्मूर्तिं हृदि संस्थाप्यैव जीवनं निर्वहति। 'वसने परिधूसरे वसाना नियमक्षाममुखीधृतैकवेणिः।

"अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥"(शा. ७.२१)

इत्युच्यते विरहपीडितां शकुन्तलां प्रेक्षमाणेन दुष्यन्तेनैव। राज्ञा परिभूतापि सा तस्मै न कुप्यति। 'परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन' इत्युच्यते तया।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तपोवने परिपालितायाा अस्या निसर्गप्रेम वर्णनीयं खलु । तपोवनतरव एवास्याः सख्यः । वनवासिनः पक्षिमृगादय एवास्याः सहचराः । सर्वेष्वेतेष्वपत्यस्नेहं दर्शयति सा । सदैव वृक्षसेचनमस्याः प्रियं कर्म । 'अस्ति मे सहोदरस्नेहोऽयेतेषु' इति सानन्दमुच्यते तया । तरुलता एवास्या जीवनम् । तेषां सुखमेवस्याः सुखम् । तेषां दुःखमेवास्या दुःखम् । मुनिना काश्यपेनैव कथ्यते कियानस्याः स्नेहस्तपोवनतरुलतास्वित्येवम्—

"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

(शा. ४ ९.)

पक्षिमृगादयोऽपि प्रिया अस्याः । पतिगृहं गच्छन्त्यास्तस्या मार्गं रुध्यते तेन मृगेण, येन शकुन्तलाया मातृवात्सल्यमुपभुक्तमासीत् पुरा ।

पितरि प्रेमाप्यस्या नाल्पम् । "कथमिदानीं तातस्यांकात् परिभ्रष्टा मलयवातोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि" इति शोचति सा पतिगृहगमनकाले । मुनिपुङ्गवेन कण्वेनाप्यनुभूयत अपत्यविरहवेदना । शकुन्तलागमनेनोत्कण्ठितेनोच्यते —

"यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ (शा. ४.६) इति

अत एव युक्तं तदभिधानं "काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला" इति

रसपरिपोषणे च--विशेषतः शृङ्गाररसपरिपोषणे अद्वितीयः कालिदासः

" नेत्रेषु लोलो मदिरालसेषु
गण्डेषु पाण्डुः कठिनः स्तनेषु ।
मध्येषु निम्नो जघनेषु पीनः
स्त्रीणामनङ्गो बहुधा स्थितोऽद्य ॥ " (ऋ.१०)

इत्यादि वसन्तागमनवर्णनमेवात्र निदर्शनम् । करुणारसोऽपि बहुनिपुणतया चित्रितं कालिदासेन ।

" सा सन्यस्ताभरणमबला पेशलं धारयंती
शय्योत्सङ्गे निहितमसकृत् दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यम् ॥

इत्येवं प्रियविरहपीडिता यक्षिणी मेघमिव सहृदयान्वाचकानपि 'अस्रं मोचयिष्यत्यवश्यम् '

पश्यतु वा शकुन्तलाम्--राजा दुष्यन्तस्तां तिरस्करोति । स्वजना अपि तां त्यजन्ति । किं करणीयं तदा तया ? असहाय्यया तयोच्यते करुणापूर्णवचः-- "अयि वसुन्धरे देहि मे विवरम् " इति । अथवा रामेण निष्कारणं त्यक्तायाः सीतया अप्यवस्था एवमेव । निर्जनेऽरण्ये क्रूरपशुसंकुले भीकर प्रदेशे रुदतीं गर्भभरालसां सीतां दृष्ट्वा क एष यः न रोदिति ? किमुत मानवाः, मृगा अपि विलपन्ति आहारमपि त्यक्त्वा--

" नृत्यं मयूराः कुसुमानि वृक्षाः दर्भानुपात्तान् विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद् रुदितं वनेऽपि ॥" २.१४.

पुनश्च अजविलापः प्रसिध्द एव । इन्दुमत्या मरणे विलपन्नजो मूर्तिमान् करुणैवाभासते ।

भस्मीभूते च मदने, रत्या विलापे, करुणारसः स्रवति एव । मदनेन विना न क्षणमपि जीवितुं शक्यमस्याः । तमेवानुगन्तुमिच्छति सा वदति च ।

"परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितः त्वदधीनं खलु देहिनां सुखम् ॥
(कु. ४.१०)

अत एव सुष्ठु भणति राजशेखरः—

"एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारललितोद्गारे कालिदासत्रयी किमु ॥" इति

वर्णनावैखरी कालिदासस्यात्युत्तमा । तद्वर्णितानि दृश्यान्यक्ष्णोः पुरः तिष्ठंतीव अस्य वर्णनाशक्तेरत्र चन्द्रोपवर्णनमेव निदर्शनम् —

" उदयगूढशशाङ्कमरीचिभिः तमसि दूरमितः प्रतिसारिते ।
अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम् ॥"
(त्रि. ३.६)

अथवा निदाघवर्णनम् —

"उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी ।
निर्भिद्योपरि कर्णिकारमुकुलान्यालीयते षट्पदः ॥
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते ।
क्रीडावेश्मनि चैष पंजरशुकः क्लान्तो जलं याचते ॥"
(वि. २.२६.)

अपि च—

प्रफुल्लचूताङ्कुर तीक्ष्णसायको द्विरफेमालाविलसध्दनुर्गुणः ।
मनांसि भेत्तुं सुरतप्रसङ्गिनां वसन्तयोध्दा समुपागतः सखे ॥
(ऋ. ६१.)

इति वसन्तागमनं वर्णयित्वा कित्रा भवत्यस्यागम इति बहुसुन्दरं कथ्यतेऽ-स्मिन् श्लोके —

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाःप्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥ इति ऋ.

एवं निसर्गसौन्दर्यवर्णने अप्रतिमः खलु कालिदासः— अत एव "Words-worth of India" इत्यभिधानं दीयत अस्मै पाश्चात्यैः तद्योग्यमेव । महाकवेः कालिदासस्य सूक्ष्मावगाहनदृष्टिं च पश्यन्त्वार्याः धावतो सारङ्गस्य वर्णने—

" ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बध्दृष्टिः ।
पश्चार्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम् ॥
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ (शा. १.)

किमन्यन्निदर्शनमवश्यं कालिदासस्य प्रतिभादर्शने ?

उपमाद्यलङ्काराणां योजने च कालिदासस्य नैपुण्यमधिकृत्य किंचिदपि वक्तव्यमेव । 'उपमा कालिदासस्ये' ति न वृथोच्यते बुधैः । बहुसुन्दराः सरसाः सार्थाश्च भवन्त्यस्योपमाः । रघुवंशस्य प्रारम्भ एव—

" क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ "

इत्यनयोपमयैवात्मनो विनयं प्रदर्शयति कालिदासः । अपि च—

स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गंगामिव भगीरथः ॥ र. ४.३२

इत्यादौ अनेकशः दृश्यतेऽस्माभिः कालिदासस्य कल्पनाशक्तिः ।
सुभाषितानीव बोधप्रदा सन्त्यनेकाः कालिदासस्योक्तयः ।
" प्रियवचनकृतोऽपि योषितां दयितजनानुनयो रसादृते ।
प्रविशति हृदयं न तद्विदां मणिरिव कृत्रिमरागयोजितः ॥ वि. २

इति 'सत्य प्रेम' (true love) स्वरूपं कथयति न तत्कृतकमणिरिव इति।
अपि च—

" यदेवोपनतं दुःखात् सुखं तद्रसवत्तरम् ॥
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ (वि. ३.२१)

इत्यत्रात्मनोऽनुभवं कथयति ।

पुनश्च 'विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया' इति न ज्ञातुं शक्यः विधिविलास इति सूचयति ।

एवं सति, सूक्तमेव 'बाणभट्टेन—

'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसांद्रासु मञ्जरीष्विव जायते ॥' इति ।

एवं साहित्यस्य सर्वेषु—नाटकेषु वा काव्येषु वा पुनश्च रसपरिपोषणादिषु—वर्णनाचातुर्ये वा लोकोक्तिप्रयोजने वा न कोऽप्यस्ति कालिदासेन समः । अतः युज्यते यदुक्तं अलेग्झाण्डर हम्बोल्टमहोदयैः—

"Tenderness in expression of feeling and richness of creative fancy have assigned to KALIDASA, a lofty place among the poets of all nations" इति.

एवं प्रसारिते जगति कालिदासस्य यशसि, किमत्र चित्रं यदि " पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठित कालिदासे, अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव इति ।"

रित्तीत्युपाह्वः श्रीनिवासः, बी. ए., (आनर्स)

धारवाड कर्णाटक कॉलेज संस्कृतसंसदः हस्तलिखित 'अर्घ्यम्' पत्रादुद्धृतम्.

# वैजयंती

वंगालदेशे फरीदपुरमंडले धनुका नामकः एकः ग्रामः अस्ति । तत्र एकः सर्वशास्त्रपारंगतः मूरभट्ट नामा पंडितः बभूव । तस्य वैजयंती नाम्नी काचित् कन्यामणिः आसीत् । तस्य गृहे वहव एव छात्राः काव्यशास्त्राध्ययनं कुर्वाणा आसन् । सः सर्वेषामपि विद्यार्थिनां अन्न वस्त्रादिकं प्रदाय पुत्रनिर्विशेषं परिपालयन् अध्यापयति स्म । तस्य गृहे दिवारात्रं विविधशास्त्राणां नित्यपाठः प्रचलति स्म । शैशवादारभ्य पितुस्समीपे उपविश्य सर्वशास्त्र साहित्य पाठान् सश्रद्धं सावधानं च श्रुणोति स्म वैजयंती । एवं प्रतिदिनं श्रावं-श्रावमेव तस्याः सर्वशास्त्रपरिचयः जातः । श्रीमान् मूरभट्टः अपि पुत्र्याः बुद्धितीक्ष्णतां ज्ञानसंपादने कुतूहलं च दृष्ट्वा आनंद्य अभिनंद्य च प्रेमपूर्वकं तां पृथक् अध्यापयामास । प्रथमतः सरससुन्दर काव्यनाटकादीनि सविमर्शं अधीत्य तत्स्वारस्यमास्वाद्य तत्सौन्दर्यमनुभूय ततः दर्शनाभ्यासः प्रारब्धः तया । न्याय-अलंकार-व्याकरणादि शास्त्रेषु नैपुण्यं संपादितम् । सरससुंदर गद्य-पद्य रचनामपि विधाय सा स्वपितरं रसिकजनांश्च रंजयति स्म । तस्याः पांडित्यस्य कवित्वस्य च कीर्तिःसर्वत्रापि प्रससार ।

यदा सा परिस्फुटलावण्ये तारुण्ये पदमर्पितवती तदा बहव एव पण्डित कुमाराः तां परिणेतुमागताः । सहजमेवेदम् । "न रत्नमन्विष्यति मृग्यते हि तत्" । तत्रैव समीपवर्तिनि 'कोटलिपाडा' नाम्नि नगरे महापंडितः प्रतिवादिभयंकरः श्री दुर्गादासतर्कवागीश नामा विद्वत्प्रवरः आसीत् । सः तर्कवाचस्पतिः वैजयंत्याः वैदुष्यं कवित्वं च श्रुत्वा कदाचित् स्वयमेवागत्य परीक्ष्य दृष्ट्वा प्रीतमना बभूव । मनस्येव 'इयं च विदुषीमणिः मम एक-मात्रपुत्राय पंडितकुलमण्डनमणये कृष्णनाथाय सर्वथा योग्या भार्या भवेत्

इति भावयित्वा मूरभट्टं विचारयामास । सोपि 'रत्नं समागच्छतु कांचनेन' इत्याशास्य अनुमेने ।

परंतु नवतारुण्यसहजेन अन्यादृशपांडित्यसुलभेन च मदेन आविष्टः सः अपरिपक्वबुद्धिः कृष्णनाथः आत्मकुलस्य मूरभट्टकुलापेक्षया उच्चैस्तरत्वमनुलक्ष्य नायं योग्यः संबन्धः इति असंमतिं प्रकटीचकार । परंतु महागुणैकपक्षपाती श्रीमान् तर्कवागीश्वरः 'गुणाः पूजास्थानम् गुणिषु न च लिंगं न च कुलम्' इति कथयित्वा वैजयंती कृष्णनाथयोः परिणयं ससंभ्रमं समुज्जृंभयामास । विवाहानंतरं पतिगृहे वसंती वैजयंती आत्मनः सौन्दर्येण सौजन्येन, सौशील्येन, सौहार्देन, पांडित्येन, कवित्वेन च ज्ञानवयोवृद्धं तर्कवाचस्पतिं तथा अन्यानपि गृहपरिजनान् नितांतमप्रीणयत् । परन्तु महादुरभिमानी कृष्णनाथस्तु तामवरकुलोत्पन्नां वैजयन्तीं स्वगृहिणीपदमलंकर्तुं सर्वथा अनर्हामिव भावयन् पितुर्भिया उदासीनस्तूष्णीमास । रसिक कुलशिखामणिः वैजयंती अपि पत्युरनास्थाम् उदासीनभावं अनादरम् च दृष्ट्वा नितरां समतप्यत अंतरंगे । पुनः पुनः निनिंद आत्मनो दुर्दैवं स्वरूपं च । यतो हि 'प्रियेषु सौभाग्यफला हि चारुता' ।

कदाचिदकस्मात् तर्कवागीश्वरः पंचत्वमुपगतः । वैजयंत्या उपरि वज्राघात एव अभवत् । ततः स्वतंत्रच्छेन पतिराजेन सार्धचन्द्रप्रयोगपुरस्कारम् निष्कासिता गृहदेवता वैजयन्ती । एवं कठोरमनसा श्री कृष्णदासेन परित्यक्ता दुःखतप्ता च सा पण्डितपुत्री पितृगृहं प्रत्यागतवती । तत्र दुःखितं दुहितुः मनः सांत्वयितुं विनोदयितुं तदीयलक्ष्मन्यत्र व्यापारयितुं च मूरभट्टः ताम् अन्यानि नवनव शास्त्राणि शिक्षयितुमुपाक्रमत । इतरकार्याभावात् बुद्धेश्च अतितीक्ष्णतया अचिरादेव सा सर्वदर्शनेष्वपि अन्यादृशं पांडित्यं प्राप ।

एकस्मिन् दिने चिरविरह कातरा सा एकांते स्थित्वा करुणकरुणैरक्षरैः मनोहरतमं काव्यमयं प्रेमपत्रमेकं कृष्णनाथाय विलिख्य प्रेषितवती

यत्र हि पत्रे तस्याः हृदयांतरालादुद्रिच्यमानः शोकः श्लोकत्वमागत आसीत्। तत् करुणाजनकं हृदयंगमं च प्रेयस्याः प्रेमपत्रमालोक्य कृष्णनाथस्य वज्रहृदयमपि विदलितम् । विद्रुतं च । अहो प्रभावः कांतासंमितोपदेशस्य यत् साक्षात् मूर्तिमतीं कांतामेव तिरस्कृतवान् कृष्णनाथः तत्कांतासंमितोपदेशेन सुतरां हृतहृदयः बभूव । तत्क्षण एव श्वशुरगृहं गत्वा वैजयंतीं अनुनीय प्रसाद्य च स्वमन्दिरम् प्रति आनिनाय । तत्र च दशगुणित प्रेमपूरितः गृहिण्या सचिवया मिथःसख्या प्रियशिष्यया एवमेकयाऽप्यनेकया अद्वितीययाऽपि द्वितीयया सह दांपत्यसुखमनुभवन् चिरमुवास ।

वैजयंती यथा पण्डिता पतिव्रता च आसीत् तथा कवयित्री अपि आसीत् । तस्याः कवनकला कौशलं वर्णनीयम् नितरां चेतोहरं च । आनंदलतिका चंपूः तस्या एव कृतिः । प्रसिद्धिपराङ्मुखया तया पत्युः प्रसिद्धिः भवेदिति कृष्णनाथनाम्ना प्रख्यापितः सः चंपूग्रंथः इति केचित् वदन्ति । संपूर्णमपि तत् चंपूकाव्यं वैजयन्त्या एव निर्मितं वा नवा इत्यत्र सन्देहेऽपि तत्काव्यरचना मुख्यतः वैजयंती सहायेन एव अभूदित्यत्र न तिलमात्रोपि सन्देहः । तत्र बहून्येव हृद्यानि पद्यानि मनोहराणि च गद्यानि चमत्कार जनकाः संनिवेशाः सरसो भावार्थश्च वैजयंत्याः कल्पनाशक्तिप्रसूताः प्रतिभाप्रभावोपज्ञाश्च इति स्पष्टमेव प्रतीयते तत्काव्यविमर्शकानाम् । कृष्णनाथः स्वयं कंठरवेणैव एतत्सत्यमंगीकरोति यत् 'आनन्दलतिका चंपूः येनाकारि स्त्रिया सह ' इति सुस्पष्टेन वाक्येन ।

वैजयंत्या अपरमपि एकं लोकंपृणनैकश्लोकभासुरम् एकांतमनोरमं सरसं सुन्दरं सुमधुरं सुगमं च दिव्यं काव्यं विरचितमासीत् । तत्तु सुश्राव्यं काव्यं बंगाल साहित्य परिषदः कार्यदर्शिना पं. अमूल्यचरण विद्याभूषण महोदयेन आलोकितमास्वादितमानंदितमभिनन्दितमतिश्लाघितं च । परन्तु हन्त

दुर्दैवेन भारतीयानां संशोधनकर्मणि औदासीन्येन अनादरेण च तत् कवि-कामिनी काव्यरत्नं नाद्यापि प्रकाशपदवीमुपयाति इति चेखिद्यते चेतः । हंत वंचित इव अद्य सर्वोपि सहृदय संसारः तथाविधकाव्य रसास्वादनसुखात् । नूनमभाजनमेवास्माकं युष्माकं हृदयं तादृश-असदृशमहाकाव्यावलोकन जनितपरमानंदानुभवस्य ।

कृष्णनाथापेक्षयापि सुन्दरतराणि साधीयांसि स्वादीयांसि च गद्यपद्यानि कविकामिनी-कामिनी कविः एषा वैजयंती तीव्रतरमेव विरचयति स्म । एकस्मिन् दिने कस्याश्चित् नायिकायाः अंगप्रत्यंगवर्णनायां व्यापृतः कृष्णभट्टः समग्ररात्रौ उन्निद्रः भूत्वा एकस्य अवयवस्य वर्णनां समापयत् । प्रातः कालेच कृष्णकांता वैजयंती आगत्य 'नाथ ह्यः रात्रौ नायिकायाः कियंति अंगानि वर्णितानि इति अप्राक्षीत् । तदा रात्रौ जागरजातरागनयनद्वन्द्वेन कृष्णनाथेन 'एकमेवांगं वर्णितम् । इतरांगवर्णनाय रात्रिसमयः न पर्याप्तः अभवत्' इति कथितम् ।

वैजयंती— कथमिदम् ? एकांगस्य वर्णनाय एकरात्रिः द्वादशघंटाः न पर्याप्तोऽवकाशः ? । हंत तर्हि एककाव्यविरचनाय किम् 'अवधि ब्रह्मणो वयः ?

कृष्ण— वक्तुं सुकरं दुष्करं ग्रथितुम् ।

वैजयंती— वरकविना पंचषनिमेषेष्वेव नायिकांग वर्णना कर्तुं शक्यते ।

कृष्ण— कोयं वरकविः ?

वैजयंती— नासौ वरकविः किंतु वधू—कविः । कवि—वधूः ।

कृष्ण— केयं कविवधूः— वधूकवि र्वा यस्या इदृशंमसदृशं आशु कवित्वम् ?

वैजयंती— काऽन्या धन्या भवति कवि—वधू: महाकवे: भवत: वधूं मामेंतरा ! दृश्यतामयं श्लोक: यत्र नायिकाया: अनेकांगानां वर्णना कृताऽस्ते ।

“अहिरयं कलधौतगिरिं भ्रमात् ।
स्तनमगात् किल नाभिह्रदोत्थित: ॥
इति निवेदयितुं नयने हि यत् .
श्रवणसीमनि किं समुपस्थिते ॥

तत् श्रुत्वा आनंदेन मूर्धानमाधुन्वन् रसिक कुलशेखरमणि: गुण-पक्षपाती रसज्ञ: कृष्णनाथ: ‘ साधु सत्यमेव भवती वरकवि: । अहमपि धन्य एव य एतादृश कवि-कामिनी पतित्वमाप्तवान् ।

वैजयंती— भवंतोपि कविवरा एव...........

कृष्ण— सत्यम् । अहमपि कवे: तव वर: पति: । अत एव कविवर: ।

एवं सरसै: काव्यमयै: विनोदालापै: काव्यमयं जीवनं निर्विविशतु: । तयो: समरसं दांपत्यं दृष्ट्वा “ रंतु: सा रमणी स एव रमण: शेषौ तु जायापती ” इति वृध्दा उद्गारमाविष्कुर्वन्ति स्म ।

एवमीदृशी असदृशी पंडितमंडली मंडनायमाना संस्कृतसाहित्यविजय वैजयंती इयं वैजयंती कदा वा स्वजन्मना भारतवर्षमिममलंचकारेति सुनिश्चितं नज्ञायते । आनन्दलतिकाचम्पूकालमनुसृत्य विचारिते सति प्राय: इयं विदुषीमणि: क्रिस्ताब्दीय १६२८ तमे वर्षे बभूव । यदा च इयं पंचविंशति वर्षदेशीया आसीत् तदैव अस्या: सहायेन अस्य चंपूकाव्यस्य निर्मितिरभूदिति च ज्ञायते । एतद्विषये अधिकं सशोधनम् आवश्यमस्ति ।

# संगीतसम्राट्

पुरा किल कोपि राजा आसीत् । सः अतीव संगीतप्रियः । 'नादलोलो नरेशः' इति सर्वत्र तस्य ख्यातिः आसीत् । एकदा सः एवं नियमम् कृतवान् यत् 'मम राज्ये सर्वैः अपि जनैः संगीतमयम् एव भाषणं कर्तव्यम् । सर्वः अपि प्रजानां व्यवहारः गीतमय एव भवेत् । **'अगीतमक्षरं न स्यात्'** । यदि कोपि गान-तानादिकं विना एकम् वर्णमात्रमपि उच्चरति तदा तस्य प्राणांतकः एव दण्डः इति ।

तदा सर्वा अपि प्रजाः संगीतमयम् एव व्यवहारं कर्तुं प्रारभंत । आदान प्रदानादिकं सर्वमपि संगीतमयमेव बभूव । शाक-पाकपदार्थाणां विक्रयाय विपणिं गतः जनः प्रथमतः उच्चैः स्वरेण आलापादिकं विधाय तानवितानादिकं च कृत्वा **"शाकमेतत् प्रदेह्यत्र रे विक्रेतृ महाशय"** इति संगीत मुखेनैव कथयति स्म । सोऽपि आदौ स्व कंठं सज्जीकृत्य आ ऽ ऽ ऽ आ ऽऽऽ स रि ग म प ध नि सा आ ऽऽऽ इति गानतरंगान् कुर्वन् एव व्यवहारं करोति स्म । एवं तत् सर्वमपि नगरं सदा गानमयं तानमयं आलापमयं संगीतमयं च बभूव ।

एकस्मिन् दिने राजा स्वस्य आज्ञा सर्वैः अपि पाल्यते वा नवा इति द्रष्टुं पट्टणे गतः । सर्वत्रापि गान-तान-वितान-आलाप-आरोह-मूर्छना-ताल लयादिकमेव दृश्यते स्म श्रूयते स्म च । एवं रागरंजितं स्वपुरं विलोक्य आनंदतुन्दिलः भूपालः बभूव । तत्र चत्वरे एकः रासभः राजानं विचित्र-वेषधारिणं दृष्ट्वा उच्चैः ध्वनिमकरोत् । राजा रासभस्य दीर्घस्वरं श्रुत्वा 'अहो प्रभावः मम आज्ञायाः यत् रासभा अपि मम आज्ञां पालयंति । अयं

रासभः अपि त्रिचतुर्वारं मुक्तकंठं आक्रुश्य दीर्घध्वनिना गीतमिव गायति' इति संतोषेण गृहमागतः ।

स राजा एकदा आस्थानमंटपे रत्नखचिते सुवर्णसिंहासने उपविष्ट आसीत् । तदा कोपि सेवकः संभ्रमेण वेगादागत्य गीतं विना एव 'राजन्............इति संबोधनं कृत्वा यदा किमपि वक्तुम् उपाक्रमत तदा अर्धोक्ते एव क्रुध्दः राजा "मूर्ख किमेवं रागरहितं वदसि ? मम राज्ये रासभा अपि रागबध्दमेव ध्वनिं कुर्वन्ति । कः त्वं नररासभः निर्गीतं निर्भीतं वदसि । वक्तव्यं सरागं वद" इति । तदा स भयभ्रान्तः किंकर्तव्यमूढः किंकरः प्रथमतः आलापं कृत्वा ततः "रा ऽ ऽ ऽ ऽ जन्!!! हे हे हे हे राजन्....तवा....आ....आ....आ....आ अश्व शाऽऽऽऽ ला....आ....आ स रि ग म प द नि सा शाला अग्निना आऽऽऽऽदह्य............ते........ तदा तत्क्षण एव राजा किं किं ?? किमभूत् ? किंवदसि ? 'मम अश्वशाला अग्निना दह्यते ? सत्यं किमिदम् ? धावत तर्हि । अग्निशामकयंत्राणि आनयत इति आदिशन्नेव अश्वशालां गतः । तत्र गत्वा यावत् पश्यति तदा सा संपूर्णा अश्वशाला भस्मीभूताऽसीत् । सर्वेपि श्रेष्ठा अश्वाः अग्निदग्धा अभवन् । तदा अतीव कुपितः राजा अश्वशालाधिकारिणम् आहूय 'मूर्ख प्रथममेव मह्यं किं न निवेदितम् ? इति अपृच्छत् । तदा सः 'राऽऽऽआ....आ....आ.... तदा राजाऽऽह "धिङ्मूढ । मा कुरु गानं । रागरहितमेव उत्तरम् देहि तदा स अश्वपालकः अवदत्— राजन् यदा अश्वशालायाः अग्निस्पर्शः अभूत् तत्क्षण एव तव समीपम् अहं संभ्रांतः अधावम् । यदा भयोद्भ्रांतः इमां वार्तां कथयितुमुद्युक्तः राजन् इति तदा युष्माभिः 'सरागमेव निवेदय' इति आज्ञा दत्ता । तदनुसारेण मया हृदयंगमां संगीतभंगीम् अंगीकृत्य 'राजन् तव अश्वशाला अग्निना दह्यते' इति निवेदना कृता । मम संगीतमये निवेदने अर्धघंटा व्यतीता । अत्रांतरे उद्दीप्तः अग्निनारायणःसर्वमपि अश्वदलं

भस्मीचकार । संगीते अनादरवान् अग्निः एव अत्र दण्डनीयः" इति । 'हुं जोषमास्व' इति तमुक्त्वा तदा राजा विचार्य स्वकीयस्य संगीतव्यामोहस्य दुरन्तपरिणामं दृष्ट्वा पुनः आज्ञापयामास । "मम राज्ये न केनापि न कदापि गानं कर्तव्यम् । संगीतशब्दः अपि न उच्चारणीयः । वीणा वेणु मृदंग ताल पणवादि सर्वमपि संगीतसाहित्यम् अद्यैव अस्मिन्नेव संदीप्ते अग्नौ आहुतीक्रियताम् सर्वेऽपि गायकाः अद्यैव शूलमारोप्यंताम् । अथवा जीवतामेव तेषाम् अग्निसंस्कारः कार्यः इति ।

---

## अहो विस्मरणम्

एकः विस्मरणशीलस्वभावः नरः आसीत् । एकदा सः रात्रौ भोजनं समाप्य मित्रस्य ग्रहं प्रति जिगमिषुः विस्मृत्य स्वकार्यालयं (कोर्ट) अगच्छत् । तत्र च द्वारं आवृतं दृष्ट्वा 'अहो इदानीं रात्रिः' इति गृहं प्रति निवृत्तः । गृहे च शय्यागारं गत्वा तत्र च पर्यंके हंसतूलतल्पे स्वस्य करगतां 'संचारयष्टिं (walking stick) शाययित्वा मृदुतमेन कंबलेन तां प्रावृत्य स्वयं च एकस्मिन् कोणे अतिष्ठत् । उषः काले कार्यार्थम् उत्थिता तदीया भार्या पतिराजं कोणे अवाङमुखं स्थित्वा शीतेन कंपमानं अपश्यत् । आश्चर्येण "अहो कोणे कुतो वा स्थितोसि नाथ" इति अपृच्छत् । तदा चक्षुषी विस्फार्य दृष्ट्वा "अहो विस्मृतमेव मया । ह्यः रात्रौ पर्यंके मम स्थाने संचारयष्टिं शाययित्वा यष्टिस्थाने अस्मिन् कोणे विस्मृत्य अहं स्थितः" इति उक्त्वा पर्यंकम् आगत्य तत्र कंबलं प्रावृत्य सुखं हंसतूलतल्पे शयानं यष्टिराजमवलोक्य पातं पातं जहास भार्यया सह ।

---

अथ व्याकरणम्—

## समासविचारः

पं. रामाचार्यः नागरली, संस्कृताध्यापकः पी.डी.जी. हायस्कूल, विजापूर

पदसमूहः समासः। समूहे विद्यमानपदैरेव पदान्तरसहायं विना-पूर्णपदं यदि भवति तदा तत्पुरुष-कर्मधारय-द्विगु-द्वन्द्वसमासाः भवन्ति। पूर्णपदं नाम साक्षात्क्रियापदेन संबंधवत्। कर्मधारये स्वाभाविकविशेषण-पदसमूहोऽपि पूर्णपदं भवति। उदाहरणानि क्रमेण वसिष्ठधेनुः मेघश्यामः त्रिपुरुषाः रामकृष्णौ इति ज्ञेयानि। एषां पदानां अस्ति शोभते वर्तते चरतः इति क्रियापदैः साक्षात् संबन्धः वर्तते। समूहे विद्यमानैः उपसर्ग-अव्यय-उपपदैः सहाव्ययवत् प्रयुक्तं पदं अव्ययीभावेन कथ्यते। यथाकालं मध्येगङ्गमित्यादि। यस्य सः येन सः इति विशेष्यानुसारेण पदानि संयोज्य नैकैः पदैः कृतः पदसमूहः सहपुत्रः—द्वित्राः इति कृत्रिम-विशेषण वाचकः वा बहुव्रीहिर्भवति। एव सामान्येन समासस्वरूपं तथा तत्पुरुषः-कर्म-धारयः-द्विगुः-द्वन्द्वः अव्ययीभावः-बहुव्रीहिश्चेति षट् समासाः।

तत्पुरुषे पूर्वपदं द्वितीयाविभक्त्या यदि युज्येत तदा द्वितीया तत्पुरुषः। एवमेव तृतीयातत्पुरुषादि। तेषु विशिष्टनियमाः वर्तते। तेषु तेषु पदेषु परेषु द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमी तत्पुरुषसमासाः भवन्ति। तद् यथा। श्रित-अतीत-पतित-गत-अत्यस्त-आपन्नशब्देषु परेषु द्वितीयातत्पुरुषः। पूर्व-सदृश-सम-ऊनार्थकेषु परेषु तृतीया त.। अर्थ-बलि-हित-सुख-रक्षितेषु चतुर्थी त.। भय भीत-भी-अपेत-अपोढ-मुक्त-पतितादिषु पञ्चमी तत्पुरुषः। संबन्धपदेषु षष्ठी तत्पुरुषः। अत्र कचिदुत्तरपदेऽपि षष्ठी वर्तते पूर्वंकायस्य पूर्वकायः इति। कुशलादिषु पकवन्धादिषु परेषु सप्तमीतत्पुरुषः। इत्येको विभागः द्वितीयः नञ् तत्पुरुषः 'न ब्राह्मणः अब्राह्मणः' इति। तृतीयस्तु प्रादि तत्पुरुषः। प्र-परा-अप-सु इत्युपसर्गैः। 'प्रकृष्टः पुरुषः प्रपुरुषः' अधिकः राजा' अधिराजः इति समासः भवति। चतुर्थस्तु कुम्भं करोति इति कुम्भकारः'

इति उपपदतत्पुरुषः। एवं (१) द्वितीयादि तत्पुरुषः (२) नञ्तत्पुरुषः (३) प्रादितत्पुरुषः (४) उपपदतत्पुरुषः इति तत्पुरुषे चत्वारः विभागाः।

उपमान विशेषण निश्चय वाचकपदैः कर्मधारयसमासः भवति मेघश्यामः शीतं च तत् उष्णंच शीतोष्णं, विद्याधनमित्युदाहरणानि। द्विगुः संख्यापूर्वः। त्रिपुरुषा इत्युदाहरणम्। समाहारे पञ्चानां पात्राणां समाहारः पञ्चपात्रं इति भवति' पञ्चपात्री इत्यपि रूपं तस्य। एवं द्विगुः, समाहारद्विगुरिति द्वौ विभागौ। द्वन्द्वे समुच्चायक-चशब्देन समासः। रामः च कृष्णः च रामकृष्णौ। समाहारद्वन्द्वे नपुंसकं भवति पाणिपादम्। प्राण्यवयववाचक पदेषु सेनावयव पदेषु परस्पर स्वाभाविकवैरं येषु तेषु समाहारद्वन्द्वः भवत्येव। द्वन्द्वे एकपदमेव शिष्यते पितरौ भ्रातरौ श्वशुरौ इत्यादि तत्र एकशेषद्वन्द्वः इति व्यवहारः। एवं, द्वन्द्वः, समाहारद्वन्द्वः एकशेषश्चेति त्रयः विभागाः द्वन्द्वे। अव्ययीभावे— मतिं अनतिक्रम्य यथामति, विष्णोः पश्चात् अनुविष्णु' इति अर्थानुसारेण समासः कर्तव्यः।

बहुव्रीहौ— 'धृतः चापः येन सः धृतचापः' इति विशेष्यानुसारेण समासः। चक्रं पाणौ यस्य सः इत्यत्र व्यधिकरण बहुव्रीहिः। द्वे वा त्रयो- वा द्वित्राः संख्याबहुव्रीहिः पुत्रेण सह सहपुत्रः' इति सहपूर्वपदबहुव्रीहिः। एवं बहुव्रीहिः, व्यधिकरणबहुव्रीहिः संख्याबहुव्रीहिः सह बहुव्रीहिः इति चत्वारः। एवं तत्पुरुषे चत्वारः, कर्मधारये एकः, द्विगौ द्वौ, द्वन्द्वे त्रयः, अव्ययीभावे एकः, बहुव्रीहौ चत्वारः। एवं पञ्चदश समासा अभ्यसनीयाः।

## उदाहरण वाक्यानि

श्रीकृष्णश्रिताः दुःखातीता भवन्ति। अमरसदृशास्ते मोक्षार्थं स्वहितं साधयन्ति। निरयभीताः संसारमुक्ताः श्लोकार्धेनापि तत्पदं लभन्ते। कर्मकुशलाः ध्यानमग्नाः ते अविनशि अतिनाकं सुखदं वैकुंठं लभन्ते।

मेघश्यामः भक्तिधनप्रधानान्महापुरुषान् तान् लोकान्तरं नयति । द्विपुरुषौ रामकृष्णौ भ्रातरौ तत्र वसतः । गोव्याघ्रं अहिनकुलं वैरं तत्र न वर्तते । धृतचापः आयुधपाणिः श्री कृष्णः प्रत्यक्षं दृश्यते च ।

**श्लोकश्च**

भक्तप्रियावरिष्टघ्नौ अजरौ अतिनिर्जरौ ।
मेघश्यामौ द्विपुरुषौ रामकृष्णौ द्विहायनम् ॥
गोव्याघ्रं च विश्राम्याथ धृतचापौ दिवौकसौ ।
अधिवृन्दावनं सौम्य सहमित्रौ विचेरतुः ॥

---

## संस्कृत समाचाराः

### कै. गु. महामहोपाध्यायानां प्रतिकृतेः अनावरणम् ।

गते इन्दौ श्रावणे वदि दशम्यां पुण्यपत्तने स. प. महाविद्यालये महामहोपाध्यायानां अभ्यंकर वासुदेवशास्त्रिणां आलेख्यस्य उद्घाटनं प्रा. डा. बेळवलकराणां अध्यक्षत्वे समभूत् । तदानीं डा. दांडेकरः व्या. को. शेण्डये गणेशशास्त्रिणः डा. वाटवे महोदयाः श्री. नवरे महाभागाः महामहोपाध्याया अभ्यंकर काशीनाथ शास्त्रिणः म. म. अभ्यंकर शास्त्रिणां विविधान् गुणान् अकथयन् । महाराष्ट्र विश्वविद्यालयोपकुलगुरवः ब्यॅा. जयकर महोदयाः स्व भाषणे " भारतेऽद्य शास्त्राणां तथा शास्त्रिणां च या योग्यता वर्तते तां जनाः न जानन्त्येव । ततः ते तेभ्यो दूरं तिष्ठन्ति । प्रति विश्वविद्यालयं द्वित्रान् शास्त्रिवरान् संस्थाप्य तेषां विद्वत्तायाः लाभं सर्वेऽपि जनाः गृण्हन्तु इति मे मतिः " इति अवोचन् । अन्ते डा. बेळवलकर महोदयाः गु. म. म. अभ्यंकर शास्त्रिणामगणितान् विद्यागुणान् प्रत्यपादयन् । एवं होराद्वयं अयं समारम्भः समभूत् इति शम् ।

## संपादकानां संस्कृत भाषणम्—

धारवाड कर्णाटक कलाशाला (कालेज)याः भव्यसभांगणे संस्कृ प्रधानाध्यापकानां श्री. पोतदार महोदयानामाध्यक्ष्ये महती सभाऽभवत्, अध्यक्षानां स्वागतभाषणानन्तरं श्री. पांडुरंग शास्त्रिभिः मुख्यातिथी म· संपादकानां पंढरीनाथाचार्याणां परिचयः तदीयनैकलोकं पृणश्लो लेखोल्लेखनपुरस्सरं विहितः। ततः संपादका सार्धघंटाकालं यावत् अस्खलि मनिर्गलं च 'कालिदासस्य प्रतिभाविलासः' इति विषयमधिकृत्य सम समभाषन्त। दुष्यंतशकुन्तलयोः प्रथमसमागम-शकुन्तलाप्रत्याख्यान मे सन्देश-कामदहन-अजरतिविलाप-पार्वतीवटुसंवादादि सन्निवेशेषु स्फुटमभि ज्यमानं कालिदासस्य कौशल्यं वरकवित्वं मानवीयहृदयपरीक्षणशक्तिं प्र भाविलासं च हृदयंगमरीत्या न्यूरूपन्। वहवो विज्ञानविद्यार्थिनः प्रा. भां प्रमुखा विज्ञानप्राध्यापकाश्चापि सकौतुकमागत्य सादरं संश्रुत्य च संस्कृत अतीव सारल्यं सुलभत्वं स्वारस्यं सौष्ठवं च दृष्ट्वा आश्चर्यचकिता अभवन्, अंते च विदुषीमणि प्रो. श्री. दवणे महाभागाः पुष्पगुच्छं समर्पयन् अतिथिभ्य कार्यदर्शिना धन्यवादवितरणं कृतम्। ततः सभा समाप्ता। तदनंतरम् बहु एव छात्रा अहमहमिकया आगत्य स्वसंतोषेण मधुरवाणी ग्राहकत्वमंगीचक्रु तत अल्पोपहारवेलायां संस्कृत समिति कार्यदर्शिभिः स्व समित्याः हस्तलिखित अर्घ्यम् पत्रम् संपादकेभ्यः प्रदर्शितम्। स[illegible]तेः कार्यकलापं संस्कृतोत्कर्ष प्रयं 'अर्घ्यस्य' लेखसौन्दर्यं च समभिनंद्य "सर्वकलाशाला (कॉलेज) गता छ एवमेव संस्कृत समितीः संस्थाप्य तद्वारा अर्घ्यसदृशमुत्तम संस्कृत पत्र संपाद्य संस्कृत भाषण लेखनाभ्यासं यदि आकलयेयुः तदाऽचिरादेव कठिणेति सुदूरं परिह्रियमाणा गैर्वाणी 'वाग् वश्येवानुवर्तेत स छात्रान्। सत्यमेव हि स्तुत्यमभिनंदनीयमितरैश्च सादरमनुकरणीयं च एते सं. संसत्सदस्यानां साहसम्। इदमर्घ्यमपि अनर्घ्यमादर्शभूतमिति नो मतिः इति स्वाशयमाविरकुर्वन् संपादकाः।

—वार्ताहरः

# नियमावलिः

---

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रतिमासं पौर्णिमायां प्रकाशते.

(२) अस्यां प्रायःप्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकाः प्रबन्धाः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सम्पादकेतरेषामपि लेखाः पद्यानि वा सरसानि चेत् अवश्यमेव प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपक-द्वयकम् । अङ्कस्यैकस्याणकाष्टकं मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं सप्तरूप्यात्मकम् । विना मूल्यं आदर्शपत्रिका न प्रदीयेत । तदिच्छुभिश्च आणकाष्टक मूल्यानि शुल्कपत्राणि प्रदीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये दशरूपकाणां दातारः सहायकाः पञ्चविंशतिरूपकप्रदाः पोषकाः, पञ्चाशद्रूप्यकदायिनोऽनुग्राहकाः शताधिकप्रदाः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एव लिखित-लेखाः नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्यधिकाराः खलु सम्पादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिग्रहीयेरन् ।

(६) लेखा, विज्ञापनानि, समालोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादि-सकलं **मधुरवाणी कार्यालय बागलकोट** ( जिल्हा विजापूर ) इति एतत्संकेतेन प्रेष्यम् ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं लेखनीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

**Regd. No. 3664.**

# सूचना.

भाद्रपद आश्विन कार्तिकांकाः

.... अपि ....

मुद्रिताः सिद्धयिष्यन्ते

प्रतिपदमेकैकांकं प्रेषयिष्यामः

वार्षिकशुल्कमपि वाचकैः सत्वरं

प्रेषणीयम्

विलंबापराधः क्षंतव्यः

इतः परं नैव कदाचिदपि एवं

विलंबो भवेदिति प्रतिजानीमो

.... वयम् ....

BOOK-POST

To, P.B.V. Raghavacharya Vidvan

Melukote Mysore State

Pandharinath Karyalaya,
BAGALKOT
(Dist. Bijapur)

Printed at The Bagalkot Printing Works, Bagalkot
By M. S. Bandargal and Published by Pandharinathacharaya
Galagali, at House No. 72 Bagalkot